| नम्बर। | ग्रन्थनाम। | ग्रन्थकारनाम। | विषय | Printed or MS | अक्षर। |
| --- | --- | --- | --- | --- | --- |
| [illegible] | व्याप्तिपञ्चकजगदीशीपत्रिका | कालीशङ्करः | न्याय | Benares, Sumvat 1941 | ग |

# अथजागदीशीपंचलक्षणीटिप्पणंकालीशंकरीप्रारभ्यते

श्रीगणेशाय नमः॥ जागदीशीपंचलक्षण्याः कालीशंकरी॥ अव्याप्यवृत्तिसाध्यकसद्धेताविति शिरोमणिः। कपिसंयोगी गगनादित्यादावव्या-
प्तिविरहाद्वृत्तिमद्धेतावव्याप्त्यर्थं सत्पदम्। अथैवमपि कपिसंयोगाभाववान् गुणत्वादित्यादावव्याप्तिर्न संभवतीति कथं अव्याप्यवृत्तिसा-
ध्यकसद्धे..त्वावच्छेदेनाव्याप्तिरुक्ता न चाव्याप्यवृत्तिसाध्यं यत्रेति व्युत्पत्त्या तत्रासन् वर्तमानो यो हेतुस्तत्राव्याप्तिरिति वाच्यं तथा सति
अव्याप्यवृत्तिसाध्यके हेतुरिति समासेनैव गगनहेतुनिराकरणे सत्पदवैयर्थ्यापत्तेः॥ अपि च संयोगाभावसाध्यकद्रव्यत्वहेतावव्याप्तिसंभ-
वेपि द्वितीयलक्षणेपि तद्वारणायोगात्। तस्मात् केवलान्वयिभिन्नाव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिवारणाय द्वितीयलक्षणमि-
ति युक्तमुत्पश्यामः॥१॥ साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारये साध्याभावपदवैयर्थ्यापत्तेः अतः सप्तमीसमासः कृतः न च तत्रा-
पि साध्यवद्भिन्ने भावद्वृत्त्यास्तां किं साध्यपदेन अधिकरणभेदेनाभावभिन्नत्वमते नैवेतल्लक्षणकरणात् गगनाभावादिकमादायाव्याप्तिविर-
हादिति वाच्यं स्वप्रतियोगितावच्छेदकसंबंधेन साध्यवद्भिन्ने वर्तते यः समवायसंबंधावच्छिन्नवह्न्यभावस्तद्वृत्तिहेतौ वृत्तितयाऽव्याप्तिवार-
णाय साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितालाभाय साध्यपदमिति जगदीशः अत्रेयमाशंका एवं सति स्वप्रतियोगितावच्छेदक-
संबंधेन साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयः कथं परित्यक्त इति विभावनीयम् अत्र केचित् सप्तमीसमासपक्षे स्वप्रतियोगिता-
वच्छेदकसंबंधेन साध्यवद्भिन्ने यः साध्यताघटकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्तद्वृत्तित्वमेव वाच्य-
मन्यथा साध्यताघटकसंबंधावच्छिन्नप्रतियोगिताकाभावमात्रनिवेशे घटभिन्नस्य तादात्म्येन साध्यत्वे पटत्वादिहेतौ द्रव्यत्वात्मकं द्रव्य-
भिन्नभेदमादायाव्याप्त्यापत्तेरभावस्यातिरिक्तत्वेपि तद्भिन्नभेदस्य तत्तत्स्वरूपत्वोपगमात् कर्मधारयपक्षे तु साध्यतावच्छेदकावच्छिन्न- राम·
प्रतियोगिताकत्वनिवेशवैयर्थ्यमिति ध्येयम् केचित्तु कर्मधारयपक्षे भावत्वेनाभावप्रवेशवैयर्थ्यं साध्यताघटकसंबंधावच्छिन्नप्रतियो- १

गिताकत्वमात्रेणाभावनिवेशस्यैवसम्यक्त्वात्। सप्तमीसमासपक्षेतुतदनिवेशेएकधर्मावच्छिन्नाधिकरणत्वस्यैक्यमतेसाध्यवद्भिन्नवृत्ति
साध्यतावच्छेदकसंबंधावच्छिन्नद्रव्यत्वावच्छिन्ननिरूपकताधिकरणत्वमादायवन्हिमान्धूमादित्यादावव्याप्तिवारणायाभावत्वेनाभाव
निवेशः निरूपकताया अपिसंबंधप्रतियोगित्वाभिन्नत्वात् नचाभावीयाधिकरणत्वीयप्रतियोगित्वयोरेकजातीयत्वमप्रामाणिकमितिवा-
च्यम् तयोरेकजातीयत्वस्यकेवलान्वयिभट्टाचार्य्येणोक्तत्वादित्याहुः।२। उच्छृंखलास्तुसाध्यवद्भिन्नश्चासौसाध्याभाववांश्चेतिकर्म
धारयः तत्रसाध्यवत्वंस्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसंबंधेनएवंचप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वं-
साध्यतावच्छेदकावच्छिन्नत्वंचनदेयंसामानाधिकरण्यमात्रस्यसंबंधत्वेघटाभावादेरपितादृशसंबंधेनसाध्यवत्तयातमादायाव्याप्ति-
विरहेणसाध्याभाववदित्यत्रसाध्यपदवैयर्थ्यापत्तेः।स्वप्रतियोगिकत्वमात्रस्यसंबंधत्वेतादृशसाध्यवद्भिन्नसाध्याभावाप्रसिद्धिरतोद्वय
मुपात्तं विशिष्टसत्तावान्जातेरित्यादावतिव्याप्तिवारणायस्ववृत्तिसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यसंबंधेनसाध्यवत्त्वं
तत्रसाध्याभाववदित्यत्रसाध्यपदसार्थक्यायस्वप्रतियोगिकत्वघटितसंबंधानुधावनंप्रक्षालनाद्धीत्यादिन्यायेनायुक्तं॥सामानाधिकरण्य
मात्रसंबंधेनैवसाध्यवत्त्वविवक्षणेसर्वदोषाभावात् विशेषणताविशेषसंबंधेनाभावाधिकरणत्वसामानाधिकरण्यघटकवृत्तित्वंचव
क्तव्यंसर्वत्रगगनघटितोभयाभाववव्यधिकरणसंबंधेनसाध्याभावंविपक्षमात्रवृत्त्यभावंचादायाव्याप्तिवारणसंभवात्। अधिकरण
भेदेनाभावभेदादिति।३। सकलेति। साकल्यंसाध्याभाववतिसाध्येचबोध्यमितितत्रसाध्याभाववतिसाकल्यविशेषणेदत्तेएवसाध्येसाकल्यविशेषणंसा
र्थकमतः प्रथमतः साध्याभाववतिसाकल्यविशेषणमितिप्रांचः।तन्नमनोरमंगगनावृत्तिधर्मवान्द्रव्यत्वादित्यादावतिव्याप्तिरितिजगदीशः। अत्रयथा
शंका। ननुसाकल्यविशेषणेदत्तेपिगगनत्वसाध्योभयाभावमादायातिव्याप्तिरितिचेन्नाइदानींव्यासज्यवृत्तिधर्मानवच्छिन्नत्वप्रतियोगितायामस्ती
त्यभिप्रायात्। अत्रेदंतत्वम्॥

जा·पं साध्येसाकल्यविशेषणस्यव्यर्थत्वफलं यदव्याप्तिवारणं तदग्रेनसंभवतीतिप्राचामाशयः नचगगनेनतद्रूपोभयवान् तद्वसादित्यादौसाध्याभाव
का·श वतिसाकल्यविशेषणेदत्तेप्यतिव्याप्तिस्तत्रसाध्यप्रतियोगिकस्यएतद्रूपाभावस्याधिकरणेहेतोरभावात् गगनेनतद्रूपोभयत्वावच्छिन्नाभा
२ वस्यचप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावात्। तादृशसकलसाध्याभावाप्रसिद्ध्याएवनास्माकमतिव्याप्तिरितिसाध्येसाकल्य
विशेषणस्यफलमपिवास्तवमतिव्याप्तिः।प्रथमतोभवतीतिवाच्यं। तत्रसाध्येसाकल्यविशेषणसत्वेपिएतद्घटावृत्तित्वावच्छिन्नाभावत
द्रूपगगनान्यतराभाववंचादायातिव्याप्तिवारणसंभवेनतस्यावान्तरफलत्वाभावात्।साध्याभाववतिसाकल्यविशेषणेनयत्फलंनभवतितस्य
वेसाध्येसाकल्यविशेषणस्यापीतरफलत्वात्। वस्तुतस्तु।साध्याभाववतीत्युक्तौसाध्याभावःसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको
ग्राह्यइत्युक्तौसाध्याभावोवेत्यनेनसहसाध्याभाववतिसाकल्यविशेषणस्यापिसान्निध्येनवैकल्पिकसंशयःस्यात्।सचनावगच्छेत॥ अतःसा
ध्याभाववतिसाध्येचेत्युक्तमितिगदाधरभट्टाचार्याः। अत्रहेतुतावच्छेदकावच्छिन्नव्यधिकरणापेक्षयाप्रतियोगितावच्छेदकावच्छिन्नप्रति
योगिव्यधिकरणाभावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वनिवेशनंयद्यपिगुरुतथापियथाभिनिवेशनवैयर्थ्यं। वस्तुतःसाध्याभावव
त्सकलनिष्ठहेतुतावच्छेदकावच्छिन्नस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वापेक्षयाहेतुतावच्छेदकावच्छिन्नयत्प्रतियोगितावच्छे
दकावच्छिन्नानधिकरणत्वंसाध्याभाववतस्तत्प्रतियोगित्वरूपंचलाघवेनास्तामितितन्मोक्तं।नचास्माकमपियद्धर्मावच्छिन्नानधिकरण
त्वसाध्याभाववत्तद्धर्मवत्वरूपस्यतदपेक्षयालाघवमितिवाच्यम्। तथासतिव्याप्तेः प्रतियोगित्वरूपत्वानुपपत्त्यामूलासंगतिः सकलस्य
साध्यप्रतियोगिकाभावस्याधिकरणाप्रसिद्ध्याव्यभिचारिण्यतिव्याप्तिवारणार्थंयदिसाध्याभावस्यविशेषणंयावत्वंतदावह्निमान्धूमादित्या राम
दावव्याप्तिस्तत्रापिसपक्षावृत्तित्वावच्छिन्नाभावस्यविपक्षावृत्तित्वावच्छिन्नाभावस्यवासाध्याभाववतोमरस्याधिकरणाप्रसिद्धेरेतनआह। २

साकल्यंसाध्याभाववतीतिजागदीशी॥ अत्रायंभावः। तत्रोक्तसाकल्यविशेषणंकिंदोषवारणायकुत्रदेयमित्याशंकायांगगनावृत्तिधर्मवान्द्र
व्यत्वात् इत्यत्रातिव्याप्तिवारणायसाकल्यस्यसाध्यांशे विशेषणत्वेपि धूमवान् वह्नेरित्यादावतिव्याप्तिवारणासंभवइतिसर्वत्रातिव्याप्ति
वारणार्थंसाध्याभावएव विशेषणंदेयमिति पुनःसकलसाध्याभावाधिकरणाप्रसिद्ध्याव्याप्तिरित्यतउक्तंयावदितिव्याप्तिः अप्रसिद्धिनिबंधना॥
व्याप्तिवारणायसाकल्यंप्रथमतःसाध्याभावविशेषणंनतुसाध्येइति अत्रेयमाशंका ननुसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकाभावस्य
लक्षणेनिवेशनीयतयातमादायकथमव्याप्तिरितिवाच्यम्। अभावरूपेप्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यंनिवेशनीयतयासम
वायादिसंबंधावच्छिन्नप्रतियोगिताकाभावमादायदोषाभावात्॥ तल्लक्षणेतस्यानिवेशनीयत्वादन्यथाधूमवान्वह्नेरित्यादौसंयोगसंबंधाव
च्छिन्नप्रतियोगिताकाभावस्यगुणादावेवसत्त्वादप्रसिद्ध्याभिधानस्योन्मत्तप्रलापापत्तेः। अथवाधूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थंसा
ध्याभावाधिकरणेसाध्यतावच्छेदकसंबंधेनकिंचिद्धूमवत्त्वस्यविशेषणीयतयासंयोगसंसर्गेणचघटावृत्तित्वावच्छिन्नाभावपटावृत्तित्वा
वच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिकरणेगुणादौसंयोगेनकिंचिद्धूमवत्त्वाप्रसिद्ध्याव्याप्तेर्दुर्वारत्वात्। अथप्रागुक्तयुक्त्यासंभवेऽव्या
प्त्यभिधानमसंगतंनचतद्घटभिन्नंपटत्वादित्यादावेवलक्षणगमनान्नासंभवइतिवाच्यं। अत्रापिपटभेदावच्छिन्नपटभेदावच्छिन्नाभावरू
पसाध्याभावस्तोमस्याधिकरणाप्रसिद्धेर्दुर्वारत्वात्। नचपटभेदावच्छिन्नाभावस्यप्रतियोगित्वंघटादिभेदेस्वीक्रियतेनतुतस्यप्रतियोगि
त्वंसाध्येपीतिवाच्यम्। तावत्पर्यंतानुधावनेधूमवान्वह्नेरित्यादौघटावृत्तित्वावच्छिन्नाभावस्यप्रतियोगित्वंघटादिभेदेस्वीक्रियते। ननु
प्रतियोगित्वंधूमादावप्यतोलाघवानुसंधानंनास्तीतिचेत्सत्यं। पटावृत्तिधर्मवान्घटत्वादित्यादौलक्षणसमन्वयसंभवान्नासंभवइतिनचप
टभेदत्वावच्छिन्नाभावस्यमठभेदत्वावच्छिन्नाभावस्यघटावृत्तिधर्माभावस्यचसाध्याभावस्तोमस्याधिकरणाप्रसिद्धौवाव्याप्तिसंभवइ

जा·पं· तिवाच्यं। तादृशाभावस्य यावत्साध्यप्रतियोगिकत्वविरहेण साध्याभावे यावत्साध्यप्रतियोगिकत्वविवक्षया तद्वारणात्। न च तत्पटादृत्तिध
का·शं· र्माभाववत्पटानुयोगिकसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभावोभयात्मकसाध्याभावस्तोमस्याधिकरणाप्रसिद्ध्यैवाव्याप्तिसंभव इति
३ वाच्यं विशेषरूपेण संसर्गत्वास्वीकारे क्षत्यभावात्, केचित्तु साध्ये साकल्यविशेषणदानेप्युभयपक्षे नित्यज्ञानानानुयोगिकविषयत्वसंबंधाव
च्छिन्नप्रतियोगिताकघटाभावे साध्ये पटत्वादिहेतौ लक्षणानान्नासंभवस्तत्र साध्याभावस्याधिकरणत्वस्य नित्यज्ञाने सत्त्वादिति दिक्॥ प्र
तियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं प्रतियोगिवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्या
प्तिरित्युक्तौ तु न कोपि दोष इति ध्येयम्॥ जगदीशः॥ न च कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिवारणाय साध्याभावे प्रतियोगिवैयधिकरण्यस्य
सार्थक्येपि हेत्वभावे प्रतियोगिवैयधिकरण्यमनर्थकमेव। न चैतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणाय तदिति वाच्यम्। तत्र सा
ध्याभाववति जलादौ कपिसंयोगाभावस्य सत्त्वेपि तदवच्छिन्नाभावस्यापि तत्र सत्त्वादिति चेन्न। द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्र
तियोगिवैयधिकरण्यस्य व्यापकताशरीरे देयत्वात्। अन्यथा द्रव्यत्वाभाववति गुणादौ विशिष्टसत्त्वाभावत्वावच्छिन्नाभावस्य सत्तास्वरूपत
या तदवच्छिन्नाभावस्य तत्र सत्त्वेन विशिष्टसत्ताभावत्वस्य व्यापकावच्छेदकत्वविरहात्। अधुना तु। तत्रापि विशिष्टसत्त्वाभावस्याभावसत्त्वे
पि तादृशाभावप्रतियोगिनो विशिष्टसत्त्वाभावस्य गुणादौ सत्त्वेन प्रतियोगिवैयधिकरण्यावच्छिन्नाभावस्य व्यापकताशरीरे निवेशनीय
तया तद्दोषवारणेपि वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिर्दुर्वारैवेति तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यावच्छिन्नत्व
विशेषणमवश्यं निवेशनीयमिति ध्येयम्॥४॥ इदन्तु यथाश्रुतमेवान्यथा साध्याभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकतानुयोगि राम
तानिरूपितप्रतियोगिताया अवच्छेदकत्वाभावस्य तादृशाभावत्वे निवेशनीयतयैव द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणसंभवेन्या ३

पकताशरीरेप्रतियोगिवैयधिकरण्यमनादेयमितिध्येयं ॥केचित्तुव्यापकताघटकीभूताभावस्यसाध्यवद्वृत्तित्वंयदियेनकेनापिसंबंधेन
तदावन्हिमान्धूमादित्यादावव्याप्तिः।वन्ह्यभाववतिकालादौकालिकसंबंधेनधूमाभावाभावस्यसत्वात्।नापिहेतुतावच्छेदकसंबंधेनसत्ता
वान्ज्ञातेरित्यादौसत्ताभाववतिसामान्यादौप्रकृतहेतुतावच्छेदकसंबंधेनवृत्तित्वाप्रसिद्धेः।नापिहेतुतावच्छेदकसंबंधान्यहेतुप्रतियो
गिकसंबंधातिरिक्तसंबंधेनसत्तावान्समवायेनप्रमेयादित्यादावव्याप्तेस्तत्रसमवायस्यैवनिरुक्तसंबंधतयासाध्याभाववतिसामान्यादौ
तेनसंबंधेनवृत्तेरप्रसिद्धेरेतेनहेतुतावच्छेदकसंबंधान्यहेतुतावच्छेदकसंबंधेनवर्त्तमानहेतुमत्प्रतियोगिकान्यसंबंधेनवृत्तित्वनिवेशा
न्नकोपिदोषइत्यपिनिरस्तम्॥निरुक्तस्थलेस्वरूपसंबंधस्यापितथात्वात्साध्याभाववतिसामान्यादौतेनसंबंधेनप्रमेयत्वरूपहेत्वभावा
भावस्यवृत्तेरिति।नापिहेतुतावच्छेदकसंबंधस्वरूपान्यतरसंबंधेनघटवान्प्रमेयत्वादित्यादौघटानुयोगिकस्वरूपसंबंधेनहेतुताया
मव्याप्तिस्तत्रसाध्याभाववत्पटादौस्वरूपसंबंधेनहेतोर्वृत्तेरतोयेनकेनसंबंधेनवृत्तित्वंवन्हिमान्धूमादित्यादावव्याप्तिवारणार्थंव्याप
कताशरीरेप्रतियोगिवैयधिकरण्यस्यावश्यनिवेशनीयत्वात्।तन्निवेशेचहेत्वभावे एतद्वृक्षत्ववान्कपिसंयोगादित्यादावतिव्याप्तिवा
रणार्थंप्रतियोगिवैयधिकरण्यावच्छिन्नस्यावश्यकत्वमितिध्येयम्॥६॥निर्धूमत्वव्याप्येतिनिर्धूमत्वव्याप्याभाववतिपर्वतमहानसादौव
न्ह्यभावाभावस्यवन्हिस्वरूपस्ययावद्विपक्षावृत्तित्वेपिवन्ह्यभावभेदस्ययावद्विपक्षवृत्तित्वसंभवात्नाव्याप्तिः नचात्यंताभावानिवे
शेधूमवान्वन्हेरित्यादावतिव्याप्तिरयोगोलकवन्हिभेदसत्वादितिवाच्यंधूमाभाववतिवन्ह्यादौवन्हिभेदासत्वेनातिव्याप्तेरनवकाशा
दितिचेदत्रकेचित्॥वन्ह्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान् वन्ह्यभावान्यत्वविशिष्टनिर्वन्हित्वादित्यादावव्याप्तिस्तत्रसाध्याभा
ववतिवन्ह्यभावेवन्ह्यभावभेदात्मकहेत्वभेदस्यासत्वात् पर्वतादौचवन्ह्यात्मकेहेत्वभावस्ययावद्विपक्षावृत्तित्वादिति॥नचवन्ह्यभा

वान्यत्वविशिष्टवन्ह्यभावाभावो न वन्हिस्वरूपः किंत्वतिरिक्त एवान्यथा वन्ह्यभावे विशिष्टाभावबुद्ध्यनुदयप्रसंग इति वाच्यं। प्रतियोगितासंयोगान्यतरसंबंधेन वन्हिनैवोपपत्तौ अतिरिक्ताभावानभ्युपगमादि ति॥ अत्रेदं चिंत्यं भवतु विशिष्टाभावो वन्हिस्वरूपः तथापि संयोगेनैव वन्ह्यभावाभावप्रतियोगितावच्छेदकत्वात्। वन्ह्यभावत्वस्य नाव्याप्तिः। न च संयोगसंबंधावच्छिन्नप्रतियोगिताकवन्ह्यभावाभावभेदात्मकहेतुभेदस्यासत्वात् अभावप्रतियोगितावच्छेदकमभावत्वमिति हेतुतावच्छेदकस्यानवच्छेदकत्वादव्याप्तिस्तथापीति वाच्यं। विषयतासंबंधावच्छिन्नप्रतियोगिताकवन्ह्यभावान्यत्वविशिष्टवन्ह्यभावाभावस्य साध्याभाववति सर्वस्मिन्नेव संभवादव्याप्त्यभावात्। एवं च धूमाभावव्याप्यवान् वन्ह्यभावादित्यत्र हेतुतावच्छेदकविशेषणताविशेषसंबंधेन प्रतियोगिव्यधिकरणविषयतासंबंधावच्छिन्नप्रतियोगिताकवन्ह्यभावाभावस्य यावत्पक्षेऽसत्वान्नाव्याप्तिरिति चेदत्र केचित् रत्यनियामकस्य व्यधिकरणसंबंधस्य वा प्रतियोगितावच्छेदकत्वानंगीकारेण तत्राव्याप्तिरित्यभिप्रायेणायं ग्रंथ इति ध्येयम्॥७॥ ॥६॥ ॥इ॰ जा॰ पं॰ का॰ शं॰ समा॰॥ अथ जागदीश्याः सिंहव्याघ्रस्य कालीशंकरी लिख्यते॥ ॥श्रीगणेशाय नमः॥ साध्यनिष्ठसामानाधिकरण्यप्रतियोगित्वा नधिकरणत्वमित्यस्य साध्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वानधिकरणत्वमिति पर्यवसितार्थे वन्हिमान्धूमादित्यादौ महानसीयवन्ह्यादिनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणपर्वतादिवृत्तित्वस्य धूमे सत्वात् अव्याप्तिरिति। साध्यसामान्यनिष्ठाभावप्रतियोगीत्येवं वक्तव्यम्। तथा च सामान्यपदस्य व्यापकत्वार्थकत्वादतिगौरवमतः कल्पांतरमिति जगदीशेनोक्तं। अन्यत्र साध्यतावच्छेदकसंबंधावच्छिन्नाधेयतानिवेशस्यावश्यकत्वम्। अन्यथा समवायसंबंधावच्छिन्नपर्वतवृत्तित्वाभावमादाय वन्हिमानित्यादावव्याप्तिः। तथा च द्रव्यवान्धूमादित्यादौ साध्यसामान्यनिष्ठाभावप्रतियोगिसाध्यतावच्छेदकसंबंधावच्छिन्नाधेयत्वाप्रसिद्धेः। एवं वन्हिमान्पर्वतरूपान्यतरस्वादित्यादावतिव्या

प्तिः। तथाहि साध्यनिष्ठाभावप्रतियोगियत्साध्यतावच्छेदकसंबंधावच्छिन्नाधेयत्वं तन्निरूपकह्रदादौ तादृशान्यतरत्वस्यासत्त्वात्। अत्रकेवित्साध्यसामान्यनिष्ठाभावीयसाध्यतावच्छेदकसंबंधावच्छिन्नाधेयत्वसंबंधावच्छिन्नप्रतियोगित्वाश्रयनिरूपितवृत्तित्वस्यानधिकरणत्वमेव निष्कृष्टदलार्थः। तथाच पर्वतादौ वह्निनिष्ठाभावप्रतियोगित्वाभावान्नाव्याप्तिरिति। अत्र यद्यप्येतादृशसंबंधस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽसंभवापत्तेः। तथापि साध्यतावच्छेदकसंबंधावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्त्वमाधेयतायां निवेशेन पूर्वोक्तदोषावकाशः। नच वह्निमान्धूमादित्यादौ समवायसंबंधावच्छिन्नपर्वताधेयत्वस्यापि तथात्वेनाव्याप्त्यापत्तेरिति वाच्यम्। साध्यतावच्छेदकसंबंधातिरिक्तसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतावन्निरूपितत्वोभयाभाववदाधेयत्वस्यैव विवक्षितत्वात् न पूर्वोक्तदोषः। नच तथापि समवायेन प्रमेयसाध्यकसत्त्वादिहेतावव्याप्तिः। प्रमेयसामान्यनिष्ठाभावप्रतियोगितादृशाधेयत्वस्याप्रसिद्धेरिति वाच्यम्। सामान्यपदस्य व्यापकतार्थकत्वेन साध्यतावच्छेदकसंबंधप्रतियोग्यनुयोगिकसाध्यतावच्छेदकताघटकसंबंधेन साध्यतावच्छेदकस्य व्यापकत्वनिवेशान्न दोष इति ध्येयं। अतिचिन्त्यम्। आधेयभेदेनाधेयताया भिन्नत्वात्तद्वह्निमान् तद्धूमादित्यादावव्याप्तिः। तद्वह्निनिष्ठो योऽभावस्तत्प्रतियोगि यत्तद्धूमनिष्ठाधेयत्वं। तन्निरूपकाधिकरणं यत्तद्धूमाधिकरणं तद्वृत्तित्वानधिकरणत्वस्य तद्धूमेऽसत्त्वात्। नच यन्निरूपितवृत्तित्वसामान्याभावः साध्येतन्निरूपितवृत्तित्वानधिकरणत्वमेव हेतौ व्याप्तिः। तथाच तक्तौ तद्धूमाधिकरणनिरूपितवृत्तित्वसामान्याभावो नास्ति तत्पदेन तद्धूमाधिकरणं धर्तुं न शक्यते। किंतु ह्रदादिकमेव तन्निरूपितवृत्तित्वानधिकरणत्वं तद्धूमेऽस्तीति वाच्यम्। एवं सति धूमवान्वह्नेरित्यादौ धूमे ह्रदनिरूपितवृत्तित्वसामान्याभावस्यासत्त्वात्। यत्पदेन ह्रदं धृत्वा तन्निरूपितवृत्तित्वानधिकरणत्वस्य वह्नौ सत्त्वादतिव्याप्तिः। नच यद्यन्निरूपितवृत्तित्व

भावः साध्येत तन्निरूपितवृत्तित्वानधिकरणत्वमेव हेतौ विवक्षणीयम्। तथा च धूमायोगोलकनिरूपितवृत्तित्वाभावोऽप्यस्ति। तत्तन्निरू-
पितवृत्तित्वानधिकरणत्वं वह्नौ नास्तीति नातिव्याप्तिरिति वाच्यम्। एवं यदधिकरणानधिकरणं साध्यमिति पूर्वव्याख्यायां धूमवान्वह्नेरि-
त्यत्रातिव्याप्तिवारणार्थं पदद्वयस्य प्रवेशगौरवमिति तदानं जगदीशस्य विरुध्येत यद्द्वयस्य प्रवेशस्यावश्यकत्वादिति ध्येयम्। अत्र लक्षणे वह्निमा-
न्धूमादित्यादौ विषमव्याप्तावव्याप्तिः। महानसीयवह्नौ पर्वतनिरूपितवृत्तित्वाभावो वर्त्तते। तत्प्रतियोगिपर्वतनिरूपितवृत्तित्वं तन्निरूपका-
धिकरणं पर्वतः तन्निरूपितवृत्तित्वमेव धूमेऽस्तीति न तत्तदनधिकरणत्वमिति जगदीशेनोक्तम्। अत्र यदि आर्द्रेन्धनप्रभववह्निमान्धूमा-
दित्यादि समव्याप्तहेतावव्याप्तिः संभवति। महानसीयवन्ह्याद्यकार्द्रेन्धनप्रभववह्नौ वर्त्तमानो यः पर्वतवृत्तित्वाभावस्तत्प्रतियोगिपर्वतवृत्ति-
त्वं। तन्निरूपकाधिकरणवृत्तित्वस्य पर्वतीयधूमे सत्वात्। ननु शब्दवान् गगनत्वादित्यादि समव्याप्तौ नाव्याप्तिः संभवति शब्दे गगनवृत्ति-
त्वाभावविरहात्। समव्याप्तत्वावच्छेदेनाव्याप्तिर्न संभवति। अतो विषमव्याप्तानुधावनमिति चेन्न। सत्ताद्रव्यत्वान्यतरवान्द्रव्यत्वादि-
त्यत्र विषमव्याप्तावप्यव्याप्तिर्न संभवति। सत्तायां द्रव्यत्वे वा द्रव्यत्वासामानाधिकरण्यविरहात्। विषमव्याप्तत्वावच्छेदेनापि अव्याप्त्य-
संभवादिति चेदत्राहुः। साध्यनिष्ठसामानाधिकरण्यसंबन्धावच्छिन्नाभावेत्यादि कल्पे आर्द्रेन्धनप्रभववह्निमान् धूमादि समव्याप्तौ का-
प्यार्द्रेन्धनप्रभववन्ह्यासामानाधिकरण्यसंबंधावच्छिन्नप्रतियोगिताकधूमसामान्याभावो नास्ति। वह्निमान्धूमादित्यत्र यत्र हेतौ व्यभिचा-
रः तदधिकरणावच्छेदेन सामानाधिकरण्यसंबंधावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्वात्। समव्याप्ते तु साध्यहेतौ व्यभिचार
एव नास्ति। कुतस्तदवच्छेदेन साध्ये निरुक्तसामानाधिकरण्यसंबंधावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्वमित्यपि न युक्तम्। तथास-
ति वह्निनिष्ठस्य सामानाधिकरण्यसंबंधेन तत्तद्धूमाभावस्य प्रतियोगित्वाधिकरणत्वस्य तत्तद्धूमे सत्वात्। आर्द्रेन्धनप्रभववह्निमान्धूमादि

त्यादावव्याप्तेर्दुर्वारत्वात्। तादृशसंबंधावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकहेतुतावच्छेदकमिति विवक्षयाव्याप्तिवारणे
पि धूमवान्वन्हेरित्यादावतिव्याप्त्यापत्तेः। वस्तुतो विषमव्याप्तत्वं व्यधिकरणवृत्तिसाध्यतावच्छेदकत्वमिति नानुपपत्तिरिति। केचित्तु स्वस
मानाधिकरणसाध्यकहेतोरेव विषमव्याप्तपदेन विवक्षिततया आर्द्रेन्धनप्रभववन्हिमान्धूमादित्यादौ विषमव्याप्तत्वं। ननु शब्दवान् गगन
त्वात्। सत्ताद्रव्यत्वान्यतरवान् द्रव्यत्वादित्यादावित्याहुः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वमित्यर्थः। साध्यनिष्ठा
धेयत्वे साध्यतावच्छेदकसंबंधावच्छिन्नत्वं बोध्यम्। अन्यथा रूपवान् महाकालत्वादित्यादौ समवायेन व्यभिचारिण्यतिव्याप्तिः। यद्यपि
कालिकसंबंधावच्छिन्नरूपनिष्ठाधेयतानिरूपकाधिकरणत्वस्यैव महाप्रलयेपि सत्वात्। संबन्धसामान्येन रूपनिष्ठाधेयत्वानिरूपका
धिकरणत्वं न महाप्रलये किंतु गगन एव। तन्निरूपितवृत्तित्वानधिकरणत्वस्य कालत्वहेतावपि सत्वात्। तत्राप्यतिव्याप्तिसंभवे महाकाल
त्वानुधावनं व्यर्थं। यादृशहेतुकव्यभिचारिमात्रएवाधेयतायां साध्यतावच्छेदकसंबंधनिवेशेऽतिव्याप्तिः। तादृशहेतुः महाकालत्वमे
व न तु केवलं कालत्वं। तथाहि जन्यरूपवान् कालत्वादित्यादौ जन्यभावानधिकरणरूपमहाप्रलयकालिकसंबंधावच्छिन्नायाजन्यरूपादि
निष्ठाधेयता तन्निरूपकाधिकरणत्वस्य सत्वात्। तादृशकालनिरूपितवृत्तित्वस्य महाकालत्वे सत्वात् ततो महाकालत्वानुधावनं। तथा च महा
काले वृत्तिमन्मात्रस्यैव कालिकसंबंधेन वृत्तित्वात्। ननु कालिकसंबंधावच्छिन्नाकिञ्चिन्निष्ठाधेयताया अनिरूपकाधिकरणत्वं महाकालेऽ
स्तीति। न च तथापि कालिकसंबंधेन वाच्यत्वस्य साध्यता जन्यत्वं हेतुः। आधेयतायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वानिवेशे तत्राव्याप्तिरे
व भवति स्वरूपसंबंधावच्छिन्नवाच्यत्वनिष्ठाधेयतानिरूपकाधिकरणत्वस्य सर्वत्र सत्वात्। संबन्धसामान्यावच्छिन्नवाच्यत्वनिष्ठाधेय
त्वानिरूपकत्वस्याप्रसिद्धेः एवं महाकालान्यत्वस्य यत्र साध्यता स्वरूपसंबंधेन समवायेन घटत्वं हेतुस्तत्र कालिकसंबंधेन महाकाला।

ता·सिं न्यत्वस्यमहाकालेसत्वात्। स्वरूपसंबंधेनमहाकालान्यत्वस्यमहाकालातिरिक्तेसत्वात्। संबंधसामान्यावच्छिन्नमहाकालान्यत्वनिष्ठा
का·शं धेयत्वनिरूपकाधिकरणत्वाप्रसिद्धेः। अत्राव्याप्तिसंभवेऽतिव्याप्तिपर्यंतानुधावनं जगदीशेन कथंकृतमिति वाच्यम्। यत्किञ्चित्संबंधाव
६ च्छिन्नसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वं यदि हेतावस्ति तदैव हेतौ लक्षणगमनं संभवतीति यद्युच्यते तदा कालिक॰
संबंधेन वाच्यत्वसाध्यकजन्यत्वहेतौ कालिकसंबंधावच्छिन्नवाच्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वस्य जन्य
त्वेसत्वात्। स्वरूपसंबंधेनमहाकालान्यत्वसाध्यकघटत्वहेतौ च स्वरूपसंबंधावच्छिन्नमहाकालान्यत्वनिष्ठाधेयत्वानिरूपकाधिक
रणवृत्तित्वानधिकरणत्वस्य घटत्वेसत्वान्नाव्याप्तिः संभवति। एवंप्रकारेण कालिकसंबंधावच्छिन्नरूपनिष्ठाधेयत्वानिरूपकाधिकरणवृ
त्तित्वानधिकरणत्वस्य महाकालत्वेसत्वात्। रूपवान् महाकालत्वादित्यत्रातिव्याप्तिः प्रसज्येत। अत्राधेयतायां यत्किंचित्सम्बन्धा
वच्छिन्नत्वमनिवेश्य विशेषतः साध्यतावच्छेदकावच्छिन्नत्वस्य निवेशनं कृतमिति। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्याप
काभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः। अथात्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वं स्वरूपसंबंधेन तादृशानिरू
पकत्ववत् यदधिकरणत्वं तद्व्यापकत्वा धिकरणत्वं परित्यज्य तादृशानिरूपकत्वव्यापकत्वं किंवा सामानाधिकरण्यसंबंधेन तादृशानि॰
रूपकत्वविशिष्टं यदधिकरणत्वं तद्व्यापकत्वं वा निवेश्यते। नाद्यः। घटभिन्नं पटत्वादित्यादावव्याप्तेः। साध्याधिकरणताभिन्नाधिकरणता॰
मात्रस्यैव साध्यनिष्ठाधेयत्वानिरूपकत्वसत्वात्। तादृशानिरूपकाधिकरणत्वव्यापकत्वस्य हेत्वधिकरणत्वाभावेऽप्रसिद्धेः। परकल्पद्वयं
न साधु। वह्निमान्वह्न्यधिकरणतात्वाद्ध्रदव्यधिकरणत्वपर्वतान्यतरत्वाद्वेत्यादावतिव्याप्तेः। हेत्वधिकरणतात्मकाधिकरणताया हेत्वधिकर राम·
णपर्वतस्य साध्यनिष्ठाधेयतानिरूपकत्वस्य सत्वात् इति चेन्न। साध्यनिष्ठाधेयत्वाभावव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वस्य ६

निष्कृष्टार्थस्याविवक्षितत्वात्। तादृशाधेयत्वाभावश्च स्वनिरूपकत्वस्वनिरूपकाधिकरणत्वोभयसंबंधावच्छिन्नप्रतियोगिताको वोध्य इति न को
ऽपि दोष इति। साध्यनिष्ठाधेयत्वाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कृष्टकल्पोपरि। न च हेतुतावच्छेदकसंब
न्धेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताव्यापकत्वमित्यस्यैव सम्यक्त्वे। अधिकरणत्वाभावपर्यन्तप्रवेशो व्यर्थ इति वाच्यम्॥
वृत्त्यनियामकसंबन्धेन हेतावतिप्रसंगात्। तादृशसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। अस्माकन्तु तादृशसंबंधेन यद्धेतुसंबंधित्वं त
स्य स्वरूपसंबन्धावच्छिन्नाभावमादाय लक्षणसमन्वयसम्भवादिति जगदीशः। अत्रेयमाशंका। हेतुतावच्छेदसंबंधावच्छिन्नयद्धर्मा
वच्छिन्नाभावत्वेन व्यापकतानिवेशे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं हेतुतावच्छेदकसम्बन्धेन वक्तव्यम्। अन्यथा वन्हि
मान्धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयो धूमावयवः तत्र धूमाभावाभावस्य समवायेन वर्त्तमानत्वात्तत्प्रतियोगितावच्छे
दकं धूमाभावत्वमिति अव्याप्तेः। एवं च सत्तावान् जातेरित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसंबंधेन वृत्ति
त्वाऽप्रसिद्ध्याऽव्याप्तिः। एवञ्च यादृशस्थलेऽव्याप्त्या पूर्वोक्तलक्षणं परित्यज्य एतादृशलक्षणं कृतं तादृशस्थल एवाव्याप्तिः सम्भवतीत्यासु
पेस्य कथं चैत्रत्ववान् तद्धूनादित्यादिस्थलांतरानुधावने कृतं। एवं द्रव्यविशिष्टसत्त्वादित्यत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे गुणे
सत्तास्वरूपविशिष्टसत्ताभावाभावो वर्त्तते तत्प्रतियोगितावच्छेदकं विशिष्टसत्त्वाभावत्वमिति तत्राप्यव्याप्तिः परिहारस्तु तादृशविवक्षायां न
सम्भवतीति चेत् अत्राहुः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकतावच्छेदकमत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किं
चिद्व्यक्तिवृत्त्यधिकरणतानवच्छेदकं यद्भिन्नत्वरूपं निवेशनीयं अत्र यत्किंचिद्व्यक्तिवृत्त्यधिकरणता हेतुमताग्रहविरोधिताघटकसंबंधा
वच्छिन्ना तथा च वन्हिमान्धूमादित्यत्र च धूमावयवनिष्ठा या स्वरूपसंबंधावच्छिन्नाधिकरणता तदवच्छेदकत्वस्यैव संयोगसंबंधावच्छि

जा·सिं· न्नप्रतियोगिताकधूमाभाववत्त्वे सत्त्वात्। एवं द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणो यो गुणः तद्वृत्ति योऽस्वरूपसं
का·शं· बंधरूपहेतुमत्त्वग्रहविरोधिताघटकसंबंधावच्छिन्नाधिकरणतानवच्छेदकत्वस्यैव विशिष्टसत्ताभाववत्त्वे सत्त्वात्। निरुक्तव्यापकतावच्छेद
७ कत्वमक्षतमेव। धूमवान्वह्नेरित्यत्र धूमनिष्ठाधेयत्वानिरूपकाधिकरणं यदयोगोलकं तन्निष्ठायास्स्वरूपसंबंधरूपहेतुमत्ताग्रहविरोधिताघ
टकसंबंधावच्छिन्नाधिकरणतानवच्छेदकत्वस्य वह्न्यभाववत्त्वे सत्त्वान्न साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किंचिद्वह्निवृत्य
धिकरणतानवच्छेदकभिन्नत्वमस्तीति नातिप्रसंगः यत्किंचित्पदमपि अतिव्याप्तिवारणार्थमेव अन्यथा तत्र पर्वतनिष्ठाधिकरणताव
च्छेदकत्वस्यैव वह्न्यभावे सत्त्वात्। वह्न्यभाववत्त्वस्य व्यापकतावच्छेदकत्वापत्तेः। अत्रेदं चिंत्यते। द्रव्यगुणान्यतरत्ववान् कर्मत्वाभावादित्य
त्रव्यभिचारिण्यतिव्याप्तिः। तथाहि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणपदेन जात्यादिकं धर्तुं न शक्यते। तन्निरूपितसमवायरूपहेतुम
त्ताग्रहविरोधिताघटकसंबंधावच्छिन्नवृत्तित्वाप्रसिद्धेः। यदि कर्म ध्रियते तदा समवायरूपहेतुमत्ताग्रहविरोधिताघटकसंबंधावच्छिन्ना
धिकतावच्छेदकत्वस्यैव कर्मत्वाभावाभाववत्त्वरूपहेत्वभावाभाववत्त्वे सत्त्वान्निरुक्तव्यापकतावच्छेदकत्वस्याक्षतत्वात्। एतेन तादृशाधिक
रणताव्यापकत्वं न तद्वृत्तिनिष्ठात्यन्ताभावाप्रतियोगित्वं किंतु तादृशाधिकरणविशिष्टान्यत्वं वैशिष्ट्यं च स्वनिष्ठावच्छेदकताकभेदवत्त्वसंबं
धेन अवच्छेदकता च निरवच्छिन्नाधेयतासंबंधेन आधेयता च हेतुमत्ताग्रहविरोधिताघटकसंबंधेन। एवं सति सत्तावान् द्रव्यत्वादि
त्यादौ नाव्याप्तिसंभव इति निरस्तम्। द्रव्यत्वगुणत्वान्यतरवान् द्रव्यगुणान्यतरत्ववान् वा कर्मत्वाभावादित्यादावतिव्याप्तिः। तथाहि
तादृशनिरूपकाधिकरणपदेन जात्यादेर्धारणं न संभवति। तन्निष्ठहेतुमत्ताग्रहविरोधिताघटकसंबंधावच्छिन्नाधेयत्वाप्रसिद्धेः किंतु ता राम
दृशाधिकरणपदेन कर्मण एव ग्रहणं। तद्विशिष्टान्यत्वं हेत्वभावे सत्त्वादिति। न च प्रतियोगिवैयधिकरण्यघटितव्यापकतायां निवेश्यत्वात् ७

व्यापकत्वघटकतद्वन्निष्ठत्वांशे संबंधनिवेशस्य वैकल्यात् तन्निवेशइतिवाच्यम्। अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसंगात्। यदि च साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठाधिकरणतासामान्ये हेतुतावच्छेदकसंबंधावच्छिन्नयद्धर्माव-च्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्व हेतुमत्ताग्रहविरोधितावटकसंबंधावच्छिन्नत्वएतदुभयाभावः। तद्धर्मभिन्नहेतुतावच्छे-दकत्वमेव व्याप्तिः। तथा च धूमवान्वह्नेरित्यादावयोगोलकनिष्ठाधिकरणतासामान्ये एव विशेषणताविशेषसंबंधावच्छिन्नत्व वह्न्यभाव-त्वावच्छिन्नत्वएतदुभयाभावसत्त्वाद्यद्धर्मपदेन वह्नित्वं धर्तुं शक्यते तद्धर्मभिन्नो न हेतुतावच्छेदकः। वह्निमान् धूमादित्यत्र तु साध्यनि-ष्ठाधेयत्वानिरूपकाधिकरणतायां धूमाभावत्वावच्छिन्नविशेषणताविशेषरूपहेतुमत्ताग्रहविरोधितावटकसंबंधावच्छिन्नत्वएतदुभ-योः सत्त्वात् यद्धर्मपदेन धूमत्वं धर्तुं न शक्यते। अधिकरणतात्वं तु निरवच्छिन्नं ग्राह्यं अन्यथा धूमवान् वह्नेरित्यत्र संयोगेन वह्नेरव्याप्यवृ-त्तित्वात् अयोगोलकनिष्ठाधिकरणतायां वन्ह्यभावत्वावच्छिन्नत्वविशेषणताविशेषसंबंधावच्छिन्नत्वएतदुभयोः सत्त्वेऽपि अयोगोलक-निष्ठनिरवच्छिन्नाधिकरणतायां तादृशोभयोभावसत्त्वान्नातिव्याप्तिरित्युच्यते तदास्यसामान्यपदघटितत्वेन यद्धर्मावच्छिन्नाधिकरणत्वा-भावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वापेक्षया गुरुत्वेना ———— नुस्थितेः। वस्तुतः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिरूपितवृ-त्तितायां हेतुतावच्छेदकसम्बंधावच्छिन्नत्वं न देयम्। किंतु वन्हिमान्धूमादित्यादावव्याप्तिवारणाय हेतुनिष्ठत्व हेतुतावच्छेदकसंबंधाव-च्छिन्नत्वएतदुभयाभावनिवेश्यत्वान्न संबंधान्तरावच्छिन्नवृत्तित्वमादाय वन्हिमान्धूमादित्यादावव्याप्तिः। सत्तावान् द्रव्यत्वादित्यादौ समवायसंबंधावच्छिन्नतादृशवृत्तित्वाप्रसिद्धावपि स्वरूपसंबंधावच्छिन्नवृत्तित्वस्य तादृशत्वान्न दोषः। यद्यपि सत्तावान् समवायेन प्रमे-यादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणसामान्यादिनिरूपितनिरुक्तोभयाभाववद्वृत्तित्वाप्रसिद्धिः। तथापि हेत्वभावाभावत्वाव-

न्या॰ सिं॰ च्छिन्नत्वहेतुतावच्छेदकसंबंधातिरिक्तसंबंधावच्छिन्नत्वए तदुभयाभावस्य विवक्षितत्वात्। सामान्यादिनिरूपितवाच्यत्वत्वावच्छिन्ना
का॰ शां॰ वृत्तिताया अप्रसिद्धत्वान्न कोपि दोषः। परे तु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेदकीभूतानुयोगितानिरू
८ पितप्रतियोगितानवच्छेदकं यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्। अधिकरणतात्वेन संबंधविशेषणानिवेशनीया संयोगसं
बंधावच्छिन्नप्रतियोगिताकधूमाभावस्य संयोगातिरिक्तसंबंधेन अधिकरणतानिरूपतानवच्छेदकत्वात्। वह्निमान्धूमादित्यादावव्या
प्तेरभावाच्च। एकसंबंधावच्छिन्नप्रतियोगिताकाभावाभावत्वस्यान्यसंबंधावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वास्वीकारात्।
अत एव कपालस्य समवायेन घटत्वावच्छिन्नवत्त्वेपि संयोगसंबंधावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्त्वाप्रसिद्ध्या ताद्रूप्येण प्रमात्वासंभ
वात् संयोगादिसंबंधेनैव तादृशघटाभावाभावत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वात्। इति केवलान्वयिग्रंथे जगदीशेन समाहि
तमिति तच्चिन्त्यम्। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमित्यत्र सत्तावान् द्रव्यत्वादित्यादौ तादृशाधिकरणनिरूपितहेतुतावच्छे
दकसंबंधावच्छिन्नाधेयत्वाप्रसिद्ध्याऽव्याप्तिरतो निष्कृष्टकल्प उक्तः। नन्वत्र हेतुतावच्छेदकसंबंधान्यहेतुनिरूपितसंबंधान्यसंबंधेन तादृ
शाधिकरणवृत्तित्वं विवक्षणीयम्। तथा सति। सत्तावान् द्रव्यत्वादित्यादौ तादृशसंबंधः स्वरूप एव तेन संबंधेन तादृशावृत्तित्वं वाच्यत्वादौ
प्रसिद्धं। तद्धड्ढदस्य हेतौ सत्त्वान्नाव्याप्तिसंभावनापीति केचित्। पूर्वपक्षेति। तन्न सत्तादौ साध्ये समवायेन प्रमेयत्वेन हेतावव्याप्तिः। हेतुताव
च्छेदकसंबंधान्यहेतुनिरूपितसंबंधान्यसंबंधः केवलसमवाय एव तेन संबंधेन सत्तानिष्ठाधेयत्वानिरूपकाधिकरणं यत्सामान्यादि तन्नि
रूपितवृत्तित्वाप्रसिद्धेः। हेतुतावच्छेदकसंबंधान्यहेतुतावच्छेदकसंबंधप्रतियोगिप्रतियोगिकसंबंधान्यसंबंधेन वृत्तित्वोक्तौ सत्तावान् प्रमेया राम
दित्यादौ तादृशसंबंधः स्वरूप एव तेन संबंधेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणसामान्यादिवृत्तित्वस्य प्रमेये सत्त्वादिति ध्येयम्। स्वरूपा॰॰ ८

धिकरणत्वांशस्यानतिप्रयोजनकतयाऽऽदृत्या दिव्याख्यानं दीधितिकृता कृतम्। अथात्र तद्दलानुक्तौ यद्धर्मावच्छिन्नाभावः तादृशाधिकरणत्व
व्यापकः तद्धत्वमित्यर्थः। अत्र यद्धर्मावच्छिन्नाभावे हेतुतावच्छेदकसंबंधेनैव वाच्यः। अन्यथा धूमवान् वन्हेरित्यादौ स्वरूपादिसंबंधेन व
न्हित्वावच्छिन्नाभावस्यापि तादृशाधिकरणत्वव्यापकत्वादतिव्याप्तिः। नन्वेवं वृत्यनियामकसंबंधेन हेतुतायां तत्संबंधावच्छिन्नप्रति
योगित्वाप्रसिद्ध्याऽव्याप्तिः। वन्ह्यादौ साध्ये संयोगेन रूपादिहेतौ तादृश संबंधावच्छिन्न रूपाभावस्य केवलान्वयितयाऽतिव्याप्तिः। चरमा
धिकरणत्वांशस्योपादाने च हेतुतावच्छेदकसंबंधावच्छिन्नयद्धर्मावच्छिन्नसंबंधित्वस्य स्वरूपसंबंधावच्छिन्नाभावस्य लक्षणघटक
तयानाव्याप्तिः। संयोगसंबंधावच्छिन्नरूपत्वावच्छिन्नसंबंधित्वाप्रसिद्ध्यानातिव्याप्तिश्चेति चेन्न हेतुतावच्छेदकसंबंधावच्छिन्नयद्ध
र्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्तादृशाधेयत्वानिरूपकाधिकरणत्वव्यापकस्तद्धर्मवत्त्वमित्यर्थकरणादेवाधिकरणत्वांश
स्यानतिप्रयोजकत्वात्। वृत्यनियामकसंबंधेन हेतुतायां तत्संबंधावच्छिन्नावच्छेदकत्वस्वीकारान्नाव्याप्तिः। संयोगादिसंबंधेन रूपसंबं
ध्याप्रसिद्ध्या तत्संबंधावच्छिन्नरूपनिष्ठावच्छेदकत्वस्यालीकत्वात्। नातिव्याप्तिरितिगूढाभिप्रायः। साध्यानधिकरणानधिकरणत्व
मितिलक्षणस्य साध्यं यदधिकरणानधिकरणं तत्त्वाभाव इत्यर्थः। ननु निरुक्तमूले नैव तादृशार्थबोधनात् दीधितिग्रन्थासंगतिरिति
चेन्न। अधिकरणमधिकरणं यस्येति समासेन तादृशार्थलभ्यत्वात्। तथा हि व्यासार्थो यन्निरूपिताधिकरणत्वावच्छिन्नप्रतियोगि
ताकभेदवदधिकरणं। समासार्थस्तु अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकं साध्यं अधिकरणानधिकरणं यस्ये
तिसाध्याधिकरणानधिकरणं। अत्र व्यासार्थस्तु। यन्निरूपिताधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकं साध्यमिति
समासार्थस्तु। साध्यनिरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदाश्रयीभूताधिकरणवृत्तित्वस्याभाव इति भावप्रत्ययार्थस्तादृशवृत्ति

त्वलाभः। ततोसाध्याधिकरणानधिकरणमिति नञ्तत्पुरुषः। नञश्चसाध्यपदोत्तरनिपातः साध्यनिपातस्य भट्टाचार्येणलिखितत्वादितिप्रथमल
क्षणप्राप्तिः साध्यस्यानधिकरणंसाध्यवद्भिन्नमितियावत्। तादृशाधिकरणं आधेयतानिरूपकं यस्यततोभावप्रत्ययात्। साध्यानधिकरणवृत्तित्व
लाभः। ततोनञ्समासः। नञ्साध्यानधिकरणपदोपात्तः। इतिद्वितीयार्थस्यप्राप्तिः। तदुभयमपीत्यादौ साध्यइत्यादेः। साध्यंयदधिकरणानधिक
रणंतत्वाभावइतिदीधितिः॥ अत्रनागदीशी साध्यानधिकरणेत्यादौ नञ्व्यत्ययेन चरमाधिकरणत्वेनसहान्वयलाभाल्लाभइत्यादिः ननुसा
ध्यानधिकरणानधिकरणत्वशब्देनसाध्यंयदधिकरणानधिकरणंतत्वाभावस्याबोधनादसंगतिरितिचेन्नव्यमतेवहुव्रीहिस्थलेविग्रहवाक्येन
यादृशार्थः प्रत्याय्यतेतत्पदार्थवैपरीत्येनान्वयावगाहिबोधःसमासेनजन्यतेइतिव्युत्पत्तेरधिकरणमनधिकरणंआधेयतानिरूपकंयस्य साध्यस्ये
तिप्रथमंबहुव्रीहिः॥ ततोधिकरणानधिकरणंयस्यइति तदुत्तरं भावप्रत्ययाच्चनञ् तत्पुरुषः नञःसाध्यपदोत्तरंनिपातः भट्टाचार्येणन
ञ्साध्यनिपातस्यचापिनयेनव्युत्पत्त्यविरोधात्। तत्रप्रथम बहुव्रीहिवाक्येनयत्पदार्थेसाध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियो
गिताकभेदवदधिकरणमिति बोधः। समासेनतुअधिकरणनिष्ठाभावप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावत्साध्यमिति
बोधोजन्यते। द्वितीयबहुव्रीहिणावाक्येनतु यत्पदोत्तरषष्ठ्यर्थस्यवृत्तितानिरूपकत्वस्याधिकरणांशेवगाहिनोक्तप्रकारएवबोधः। द्वि
तीयबहुव्रीहिणातुपुनस्तत्पदार्थेनञ्व्यत्ययेनसाध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणनिरूपितत्वंयत्प
दार्थेबोध्यतेभावप्रत्ययेनतादृशवृत्तित्वमात्रंनञ्तत्पुरुषेणतदभावइतिरीत्याचरमाधिकरणांशविनिर्मुक्तस्यसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूप
स्यप्रथमलक्षणार्थस्यावगतेः। द्वितीयलक्षणार्थावगतिस्तु। एवंरीत्यासाध्यस्यानधिकरणंसाध्यानधिकरणंसाध्यवद्भिन्नमितियावत्। तदेवाधिकरणमाधेयतानिरूपकं 
यस्येतिवाक्येनयन्निष्ठाधेयतानिरूपकंसाध्यवद्भिन्नमितिबोधः। समासेनतुसाध्यवद्भिन्ननिरूपितवृत्तित्वपत्पदार्थेबोध्यतेइतिप्राचांसमाधानं। अत्रोत्पत्तिकालावच्छे 

दिनघटेपृथिवीत्वेनरूपवद्वृत्तित्वंइतिप्रतीत्यापृथिवीत्वादौरूपवद्वृत्तित्वाभावाभ्युपगमेहेत्वधिकरणनिष्ठावच्छेदकत्वनिरवच्छिन्नमप्यु
तेनरूपवान्पृथिवीत्वादित्यादौनाव्याप्तिः।तत्रघटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादितिध्येयमितिजगदीशाः।अत्रकेचिदाक्षि
पन्ति।नचहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणावच्छेद्यसाध्योपलक्षितवृत्तित्वाभावस्यैवलक्षणेनिवेश्यत्वं।अन्यथावन्हिप्रा
गभावेवन्हिविशिष्टनिरूपितवृत्तित्वाभावस्यसत्वात् वन्हिमान्वन्हिप्रागभावादित्यादावव्याप्तिस्स्यात्।तथाचसाध्यविशिष्टनिरूपि
तवृत्तित्वाभावसत्वेपिसाध्योपलक्षितनिरूपितवृत्तित्वाभावविरहेणवन्हिमान्वन्हिप्रागभावादित्यादावव्याप्तिविरहात्।कथंहेत्वधिक
रणनिष्ठावच्छेदकतायांनिरवच्छिन्नत्वनिवेशितमितिवाच्यम्।साध्योपलक्षितनिरूपितवृत्तित्वाभावस्यनिवेशेऽपिवन्हिमान्वन्हिप्रा
गभावादित्यादावव्याप्तिवारणार्थंहेत्वधिकरणनिष्ठावच्छेदकतायांनिरवच्छिन्नत्वंदेयम्।अन्यथावन्ह्यधिकरणकालावच्छेदेनव
न्ह्युपलक्षितनिरूपितवृत्तित्वाभावसत्वादव्याप्तिरितिध्येयम्॥ ॥इतिजागदीशीपंचलक्षणीटिप्पणंकालीशंकरीसमाप्तम्॥ ॥ ॥

वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥ ॥श्रीकाशीजीमेंज्ञानवापीकेपूर्वफाटकपरश्रीवि
श्वनाथजीकेपासश्री३युतमहाराजशिवलालदूबेजीकेमकानमेंकाशीसंस्कृतमुद्रायन्त्रमेंछपि जिनकोलेनाहोयउन्होंनेइसछापेखाने
केकार्यसंपादकबाबूवाराणसीप्रसादयाकचौरीगलीमेंभाईप्रतापसिंहजीकेदुकानपरमिलेगी॥मितिज्येष्ठशुद्ध८मंदवासरेसंवत्१९३१॥

इतिजागदीशीपंचलक्षणीटिप्पणंकालीशंकरीसमाप्ता